# ॥ श्री यंत्रोद्धारक स्तुतिः ॥

नमामि दूतं रामस्य ।
सुखदं च सुरद्रुमम ।
पीनवृत्तमहाबाहुं ।
सर्वशत्रुनिवारणम ॥ १ ॥

नानारत्नसमायुक्त ।
कुण्डलादि विराजितं ।
सर्वदाभीष्टदातारं ।
सतां वै दृढमाहवे ॥ २ ॥

वासिनं चक्रतीर्थस्य ।
दक्षिणस्थगिरौसदा ।
तुंगांबोधितरण्गस्य ।
वातेन परिशोभिते ॥ ३ ॥

नानादेशागतैस्सद्भिः ।
सेव्यमानं नृपोत्तमैः ।
धूप दीपादि नैवेद्यैः ।
पंचखाद्यैश्च शक्तितः ॥ ४ ॥

भजामि श्री हनूमंतम ।
हेमकांति समप्रभं ।
व्यासतीर्थ यतींद्रेण ।
पूजितं प्रणिधानतः ॥ ५ ॥

त्रिवारं यः पठेन्नित्यं ।
स्तोत्रं भक्ताद्द्विजोत्तमः ।
वांछितं लभदेऽभीष्टं ।
षण्मासाभ्यंतरे खलु ॥ ६ ॥

पुत्रार्थिर्लभते पुत्रं ।
यशार्थिर्लभते यशः ।
विद्यार्थिर्लभते विद्यां ।
धनार्थिर्लभते धनं ॥ ७ ॥

सर्वथा मास्तुसंदेहो ।
हरि:साक्षी जगत्पतिः ।
यः करोत्यत्र संदेहं ।
स याति नरकं ध्रुवम ॥ ८ ॥